गूढशब्दाभिधानञ्च न प्रयोज्यं कथञ्चन ।
सुधियामपि नैवेदमुपकाराय कल्पते ॥ ४५ ॥

असितर्त्तितुगाद्रिच्छित् स्वःक्षितां पतिरद्रिदृक् ।
अमिद्भिः शुभ्रदृग्दृष्टैर्द्विषो जेघ्नीयिषीष्ट वः[1] ॥ ४६ ॥

श्रुतिदुष्टार्थदुष्टे च कल्पनादुष्टमित्यपि ।
श्रुतिकष्टं तथैवाहुर्वाचां दोषं चतुर्विधम् ॥ ४७ ॥

विड्वर्चोविष्ठितक्लिन्न[2]च्छिन्नवान्तप्रवृत्तयः ।
प्रचारधर्षितोद्गारविसर्गहृदयन्त्रिताः[3] ॥ ४८ ॥

हिरण्यरेताः सम्बाधः पेलवोपस्थिताण्डजाः ।
वाक्काटवादयश्चेति श्रुतिदुष्टा मता गिरः ॥ ४९ ॥

अर्थदुष्टं पुनर्ज्ञेयं यत्रोक्ते जायते मतिः ।
असभ्यवस्तुविषया शब्दैस्तद्वाचिभिर्यथा ॥५०॥

हन्तुमेव प्रवृत्तस्य स्तब्धस्य[4] विवरैषिणः ।
पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नतिः ॥ ५१ ॥

पदद्वयस्य सन्धाने यदनिष्टं प्रकल्पते[5] ।
तदाहुः कल्पनादुष्टं सशौर्याभरणो यथा ॥ ५२ ॥

---

१ असितर्तिभुगाद्रिक्षित स्वः कितां पतिरद्रिदृक् ।
अमीभिः शुभ्रदृग्वृष्टैर्द्विषो जघ्नीयिषीष्ट वः ॥—घ ।
२ ०च्छिन्नक्लिन्न०-क । ३ हृदयं तृताः ? (यन्त्रिताः ?)-ग ।
४ स्तम्भस्य ( स्तब्धस्य ? )-ग ।
५ प्रगल्भते-क, प्रकल्प्यते-घ ।

यथाऽजिह्लदित्यादि श्रुतिकष्टञ्च तद्विदुः ।
न तदिच्छन्ति कृतिनो गण्डमप्यपरे किल ॥ ५३ ॥
सन्निवेशविशेषात्तु दुरुक्तमपि शोभते ।
नीलं पलाशमाबद्धमन्तराले स्रजामिव ॥ ५४ ॥
किञ्चिदाश्रयसौन्दर्याद् धत्ते शोभामसाध्वपि ।
कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम् ॥ ५५ ॥
आपाण्डुगण्डमेतत्ते वदनं वनजेक्षणे ।
सङ्गमात्पाण्डुशब्दस्य गण्डः साधु यथोदितम् ॥५६॥
अनयाऽन्यदपि ज्ञेयं दिशा युक्तमसाध्वपि ।
यथा विक्लिन्नगण्डानां करिणां मदवारिभिः[1] ॥५७॥
मदक्लिन्नकपोलानां द्विरदानां चतुश्शती ।
यथा तद्वदसाधीयः साधीयश्च प्रयोजयेत् ॥ ५८ ॥
एतद् ग्राह्यं सुरभि कुसुमं ग्राम्यमेतन्निधेयं
धत्ते शोभां विरचितमिदं स्थानमस्यैतदस्य ।
मालाकारो रचयति यथा साधु विज्ञाय मालां
योज्यं काव्येष्ववहितधिया तद्वदेवाऽभिधानम् ॥५९॥

इति श्रीभामहालङ्कारे प्रथमः परिच्छेदः ।

---

१ मुदवारिभिः-घ ।

# द्वितीयः परिच्छेदः ।

माधुर्यमभिवाञ्छन्तः प्रसादं च सुमेधसः ।
समासवन्ति भूयांसि न पदानि प्रयुञ्जते ॥ १ ॥
केचिदोजोऽभिधित्सन्तः समस्यन्ति बहून्यपि ।
यथा मन्दारकुसुमरेणुपिञ्जरितालका ॥ २ ॥
श्रव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते ।
आविद्वदङ्गनाबालप्रतीतार्थं प्रसादवत् ॥ ३ ॥
अनुप्रासः सयमको रूपकं दीपकोपमे ।
इति वाचामलङ्कारः पञ्चैवाऽन्यैरुदाहृताः ॥ ४ ॥
सरूपवर्णविन्यासमनुप्रासं प्रचक्षते ।
किंतया चिन्तया कान्ते नितान्तेति यथोदितम् ॥५॥
ग्राम्यानुप्रासमन्यत्तु मन्यन्ते सुधियोऽपरे ।
स लोलमालानीलालिकुलाकुलगलो बलः ॥ ६ ॥
नानार्थवन्तोऽनुप्रासा न चाप्यसदृशाक्षराः ।
युक्त्यानया मध्यमया जायन्ते चारवो गिरः ॥ ७ ॥
लाटीयमप्यनुप्रासमिहेच्छन्त्यपरे यथा ।
दृष्टिं दृष्टिसुखां धेहि चन्द्रश्चन्द्रमुखोदितः ॥ ८ ॥
आदिमध्यान्तयमकं पादाभ्यासं तथावली ।
समस्तपादयमकमित्येतत् पञ्चधोच्यते ॥ ९ ॥

सन्दष्टकसमुद्गादेरत्रैवान्तर्गतिर्मता ।
आदौ मध्यान्तयोर्वा स्या[1]दिति पञ्चैव तद्यथा ॥१०॥
साऽधुना साधुना तेन राजताऽराजताऽऽभृता ।
सहितं सहितं कर्त्तुं सङ्गतं सङ्गतं जनम् ॥ ११ ॥
साधुः संसाराद्बिभ्यदस्मादसारात्
कृत्वा क्लेशान्तं याति वर्त्म प्रशान्तम् ।
जातिं व्याधीनां दुर्नयानां[2]मधीनां
वाञ्छन्त्या (ऽज्ज्या?)यस्त्वं छिन्धि मुक्तान(म?)यस्त्वम्॥१२॥
न ते धीर्धीर भोगेषु रमणीयेषु सङ्गता
मुनीनपि हरन्त्येते रमणी येषु सङ्गता ॥ १३ ॥
सितासिताक्षीं सुपयोधराधरां
सुसम्मदां व्यक्तमदां ललामदाम् ।
घना घना नीलघनाघनालकां
प्रियामिमामुत्सुकयन्ति यन्ति च ॥ १४ ॥
अमी नृपा दत्तसमग्रशासनाः
कदाचिदप्यप्रतिबद्धशासनाः ।
कृतागसां मार्गभिदां च शासनाः
पितृक्रमाध्यासितताद्दशासनाः ॥ १५ ॥
अनन्तरैकान्तरयोरेवं पादान्तयोरपि ।

---

१ स्यामि ( दि ? ) ति-ग  २ दुर्दयानां-ग

कृत्स्नं च सर्वपादेषु दुष्कृतं साधु तादृशम् ॥ १६ ॥
तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् ।
वर्णानां यः पुनर्वादो यमकं तन्निगद्यते ॥ १७ ॥
प्रतीतशब्दमोजस्वि सुश्लिष्टपदसन्धि च ।
प्रसादि स्वभिधानंच यमकं कृतिनां मतम् ॥ १८ ॥
नानाधात्वर्थगम्भीरा यमकव्यपदेशिनी ।
प्रहेलिका सा ह्युदिता रामशर्माच्युतोत्तरे ॥ १९ ॥
काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत् ।
उत्सवः सुधियामेव हन्त ! दुर्मेधसो हताः ॥ २० ॥
उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते ।
गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः ॥ २१ ॥
समस्तवस्तुविषयमेकदेशविवर्त्ति च ।
द्विधा रूपकमुद्दिष्टमेतत्तच्चोच्यते यथा ॥ २२ ॥
शीकरा[1]म्भोमदसृजस्तुङ्गा जलददन्तिनः ।
निर्यान्तो मण्डयन्तीमे शक्रकार्मुककाननम्[2] ॥ २३ ॥
तडिद्वलयकक्ष्याणां बलाकामालभारिणाम् ।
पयोमुचां ध्वनिर्धीरो दुनोति मम तां प्रियाम् ॥ २४ ॥
आदिमध्यान्तविषयं त्रिधा दीपकमिष्यते ।

---

१ सीकर०—ग २ निर्यान्तो मदयन्तीमे शक्रकार्मुककारणम्—ग

एकस्यैव त्र्यवस्थत्वादिति तद्भिद्यते त्रिधा ॥ २५ ॥
अमूनि कुर्वतेऽन्वर्थामस्याख्यामर्थदीपनात् ।
त्रिभिर्निदर्शनैश्चेदं त्रिधा निर्दिश्यते यथा ॥ २६ ॥
मदो जनयति प्रीतिं साऽनङ्गं मानभङ्गुरम् ।
स प्रियासङ्गमोत्कण्ठां साऽसह्यां मनसश्शुचम् ॥२७॥
मालिनीरंशुकभृतः स्त्रियोऽलङ्कुरुते मधुः ।
हारीतशुकवाचश्च भूधराणामुपत्यकाः ॥ २८ ॥
चीरीमती[2]ररण्यानीः सरितश्शुष्यदम्भसः ।
प्रवासिनां च चेतांसि शुचिरन्तं निनीषति ॥ २९ ॥
विरुद्धेनोपमानेन देशकालक्रियादिभिः ।
उपमेयस्य यत्साम्यं गुणलेशेन सोपमा ॥ ३० ॥
यथेवशब्दौ सादृश्यमाहतुर्व्यतिरेकिणोः ।
दूर्वाकाण्डमिव श्यामं[3] तन्वी श्यामालता[4] यथा ॥३१॥
विना यथेवशब्दाभ्यां समासाभिहिता परा ।
यथा कमलपत्राक्षी शशाङ्कवदनेति च ॥ ३२ ॥
वतिनापि क्रियासाम्यं तद्वदेवाभिधीयते ।
द्विजातिवदधीतेऽसौ गुरुवच्चानुशास्ति नः ॥ ३३ ॥
समानवस्तुन्यासेन प्रतिवस्तूपमोच्यते ।
यथेवानभिधानेऽपि गुणसाम्यप्रतीतितः ॥ ३४ ॥

१ सानलं—क २ चरीमती-क ३ श्यामा—घ ४ श्यामलता-ग, घ

साधु साधारणत्वादिर्गुणोऽत्र व्यतिरिच्यते ।
स साम्यमापादयति विरोधेऽपि तयोर्यथा ॥ ३५ ॥
कियन्तः सन्ति गुणिनः साधुसाधारणश्रियः ।
स्वादुपाकफलानम्राः कियन्तो वाऽध्वशाखिनः॥३६॥
यदुक्तं त्रिप्रकारत्वं तस्याः कैश्चिन्महात्मभिः ।
निन्दाप्रशंसाचिख्यासाभेदादत्राभिधीयते ॥ ३७ ॥
सामान्यगुणनिर्देशात् त्रयमप्युदितं ननु ।
मालोपमादिः सर्वोऽपि न ज्यायान् विस्तरो मुधा॥३८॥
हीनतासम्भवो लिङ्गवचोभेदो विपर्ययः ।
उपमानाधिकत्वं च तेनासदृशतापि च ॥ ३९ ॥
त एत उपमादोषाः सप्त मेधाविनोदिताः ।
सोदाहरणलक्ष्माणो वर्ण्यन्तेऽत्र च ते पृथक्॥ ४० ॥

स मारुताकम्पितपीतवासा
विभ्रत् सलीलं शशिभासमब्जम् ।
यदुप्रवीरः प्रगृहीतशार्ङ्गः
सेन्द्रायुधो मेघ इवावभासे ॥ ४१ ॥

शक्रचापग्रहादत्र दर्शितं किल कार्मुकम् ।
वासश्शङ्खानुपादानाद्धीनमित्यभिधीयते ॥ ४२ ॥
सर्वं सर्वेण सारूप्यं नास्ति भावस्य कस्यचित् ।
यथोपपत्ति कृतिभिरुपमासु प्रयुज्यते ॥ ४३ ॥

अखण्डमण्डलः क्वेन्दुः क्व कान्ताननमद्युति ।
यत्किञ्चित् कान्तिसामान्याच्छशिनैवोपमीयते॥४४॥
किञ्चित्काव्यानि नेयानि लक्षणेन महात्मनाम् ।
दृष्टं वा सर्वसारूप्यं राजमित्रे यथोदितम् ॥४५॥

सूर्यांशुसम्मीलितलोचनेषु
दीनेषु पद्मानिलनिर्मदेषु ।
साध्व्यः स्वगेहेष्विव भर्तृहीनाः
केका विनेशुः शिखिनां मुखेषु ॥ ४६ ॥

निष्पेतुरास्यादिव तस्य दीप्ताः
शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा
दिनार्द्धभाजः परिवेषिणोऽर्कात् ॥ ४७ ॥

शाखवर्धनस्य ।

कथं पातोऽम्बुधाराणां ज्वलन्तीनां विवस्वतः ।
असम्भवादयं युक्त्या तेनासम्भव उच्यते ॥ ४८ ॥
तत्रासम्भविनार्थेन कः कुर्यादुपमां कृती ।
को नाम वह्निनौपम्यं कुर्वीत शशलक्ष्मणः ॥ ४९ ॥
यस्यातिशयवानर्थः कथं सोऽसम्भवो मतः ।
इष्टं चातिशयार्थत्वमुपमोत्प्रेक्षयोर्यथा ॥ ५० ॥

---

१ विनेदुः—क

पुञ्जीभूतमिव ध्वान्तमेष भाति मतङ्गजः ।
सरः शरत्प्रसन्नाम्भो नभःखण्डमिवोज्झितम् ॥५१॥
अथ लिङ्गवचोभेदावुच्येते सविपर्ययौ ।
हीनाधिकत्वात् स द्वेधा त्रयमप्युच्यते यथा ॥५२॥
अविगाह्योऽसि नारीणामनन्यमनसामपि ।
विषमोपलभिन्नोर्मिरापगेवोत्तितीर्षतः ॥ ५३ ॥
क्वचिदग्रे प्रसरता क्वचिदापत्य निघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥५४॥
अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् ब्रह्मा विनिर्मित्सुरिव प्रजाः ॥५५॥
ननूपमीयते पाणिः कमलेन विकासिना ।
अधरो विद्रुमच्छेदभासा बिम्बफलेन च ॥ ५६ ॥
उच्यते काममस्तीदं किन्तु स्त्रीपुंसयोरयम् ।
विधिर्नाभिमतोऽन्यैस्तु त्रयाणामपि नेष्यते ॥५७॥
स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानश्शशिनेव मेघः ५८।

रामशर्मणः ।

शशिनो ग्रहणादेतदाधिक्यं किल नह्ययम् ।
निर्दिष्ट उपमेयेऽर्थे वाच्यो वा जलदोऽत्र तु ॥ ५९ ॥
न सर्वसारूप्यमिति विस्तरेणोदितो विधिः ।

अभिप्रायात्कवेर्नात्र विधेया जलजे मतिः ॥६०॥
आधिक्यमुपमानानां न्याय्यं[1] नाधिकता भवेत् ।
गोक्षीरकुन्दहालिनां विशुद्ध्या सदृशं यशः ॥ ६१ ॥
एकेनैवोपमानेन[2] ननु सादृश्यमुच्यते ।
उक्तार्थस्य प्रयोगो हि गुरुमर्थं न पुष्यति ॥६२॥

वनेऽथ तस्मिन्वनितानुयायिनः
प्रवृत्तदानार्द्रकटा मतंगजाः ।
विचित्रबर्हाभरणाश्च बर्हिणो
बभुर्दिवीवामलविग्रहा ग्रहाः ॥ ६३ ॥

ग्रहैरपि गजादीनां यदि सादृश्यमुच्यते ।
तथापि तेषां तैरस्ति कान्तिर्वाप्युग्रतापि वा ॥६४॥
इत्युक्त उपमाभेदो वक्ष्यते चापरः पुनः ।
उपमादेरलङ्कारािद्विशेषोऽन्योऽभिधीयते ॥ ६५ ॥
आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना ।
समासातिशयोक्ती च षडलङ्कृतयोऽपराः ॥६६॥
वक्ष्यमाणोक्तविषयस्तत्राक्षेपो द्विधा मतः ।
एकरूपतया शेषा निर्देक्ष्यन्ते यथाक्रमम् ॥ ६७ ॥
प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ।
आक्षेप इति तं सन्तः शंसन्ति द्विविधं यथा ॥६८॥

---

१ न्याय्या-घ । २ एतेनै०-ग ।

अहं त्वां यदि नेक्षेय क्षणमप्युत्सुका ततः ।
इयदेवास्त्वतोऽन्येन किमुक्तेनाप्रियेण तु ॥ ६९ ॥
स्वविक्रमान्तभुवाश्चित्रं यन्न तवोद्धतिः ।
को वा सेतुरलं सिन्धोर्विकारकरणं प्रति ॥ ७० ॥
उपन्यसनमन्यस्य यदर्थस्योदितादृते ।
ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यथा ॥ ७१ ॥
परानीकानि भीमानि विविक्षोर्न तव व्यथा ।
साधु वाऽसाधु वाऽऽगामि पुंसामात्मैव शंसति ॥ ७२ ॥
हिशब्देनापि हेत्वर्थप्रथनादुक्तसिद्धये ।
अयमर्थान्तरन्यासः सुतरां व्यज्यते यथा ॥ ७३ ॥
वहन्ति गिरयो मेघानभ्युपेतान् गुरूनपि ।
गरीयानेव हि गुरून् बिभर्ति प्रणयागतान् ॥ ७४ ॥
उपमानवतोऽर्थस्य यद्विशेषनिदर्शनम् ।
व्यतिरेकं तमिच्छन्ति विशेषापादनाद्यथा ॥ ७५ ॥
सितासिते पक्ष्मवती नेत्रे ते ताम्रराजिनी ।
एकान्तशुभ्रश्यामे तु पुण्डरीकासितोत्पले ॥ ७६ ॥
क्रियायाः प्रतिषेधे या तत्फलस्य विभावना ।
ज्ञेया विभावनैवासौ समाधौ सुलभे सति ॥ ७७ ॥
अपीतमत्ताः शिखिनो दिशोऽनुत्कण्ठिताकुलाः ।

१ त्वा-ग ।

नीपोऽविलिप्तसुरभिरभ्रष्टकलुषं जलम् ॥ ७८ ॥
यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः।
सा समासोक्तिरुद्दिष्टा संक्षिप्तार्थतया यथा[1] ॥७९॥
स्कन्धवानृजुरव्यालः स्थिरोऽनेक[2]महाफलः।
जातस्तरुरयं चोच्चैः पातितश्च नभस्वता ॥८०॥
निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम्।
मन्यन्तेऽतिशयोक्तिं तामलङ्कारतया यथा ॥८१॥
स्वपुष्पच्छविहारिण्या चन्द्रभासा तिरोहिताः।
अन्वमीयन्त भृङ्गालिवाचा सप्तच्छदद्रुमाः ॥८२॥
अपां यदि त्वक् शिथिला च्युता स्यात् फणिनामिव।
तदा शुक्लांशुकानि स्युरङ्गेष्वम्भसि योषिताम् ॥८३॥
इत्येवमादिरुदिता गुणातिशययोगतः।
सर्वैवातिशयोक्तिस्तु तर्कयेत् तां यथागमम् ॥८४॥
सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥८५॥
हेतुश्च सूक्ष्मो लेशोऽथ नालङ्कारतया मतः।
समुदायाऽभिधानस्य वक्रोक्त्यनभिधानतः ॥ ८६ ॥
गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः।
इत्येवमादि किं काव्यं वार्त्तामेनां प्रचक्षते ॥८७॥

---

१. संक्षिप्तार्था यथा-तथा-क। २. स्थिरोऽङ्क-घ।

यथासङ्ख्यमथोत्प्रेक्षामलङ्कारद्वयं विदुः ।
सङ्ख्यानमिति मेधाविनोत्प्रेक्षाभिहिता क्वचित् ॥८८॥
भूयसामुपदिष्टानामर्थानामसधर्मणाम् ।
क्रमशो योऽनुनिर्देशो यथासङ्ख्यं तदुच्यते ॥८९॥
पद्मेन्दुभृङ्गमातङ्गपुंस्कोकिलकलापिनः ।
वक्त्रकान्तीक्षणगतिवाणीबालैस्त्वया जिताः ॥९०॥
अविवक्षितसामान्या किञ्चिच्चोपमया सह ।
अतद्गुणक्रियायोगादुत्प्रेक्षातिशयान्विता ॥ ९१ ॥
किंशुकव्यपदेशेन तरुमारुह्य सर्वतः ।
दग्धाऽदग्धमरण्यान्याः पश्यतीव विभावसुः ॥९२॥
स्वभावोक्तिरलङ्कार इति केचित् प्रचक्षते ।
अर्थस्य तदवस्थत्वं स्वभावोऽभिहितो यथा ॥९३॥
आक्रोशन्नाह्वयन्नन्यानाधावन्मण्डलैर्नुदन् ।
गा वारयति दण्डेन डिम्भः शस्यावतारणीः ॥९४॥
समासेनोदितमिदं धीखेदायैव विस्तरः ।
असंगृहीतमप्यन्यदभ्यूह्यमनया दिशा ॥ ९५ ॥
स्वयंकृतैरेवनिदर्शनैरियं मया प्रक्लृप्ता खलु वागलङ्कृतिः ।
अतः परं चारुरनेकधापरो गिरामलङ्कारविधिर्विधास्यते॥९६॥

इति श्रीभामहालङ्कारे द्वितीयः परिच्छेदः ।

# अथ तृतीयः परिच्छेदः ।

प्रेयो रसवदूर्जस्वि पर्यायोक्तं समाहितम् ।
द्विप्रकारमुदात्तं च भेदैः श्लिष्टमपि त्रिभिः ॥१॥
अपह्नुतिं विशेषोक्तिं विशेषं तुल्ययोगिताम् ।
अप्रस्तुतप्रशंसां च व्याजस्तुतिनिदर्शने ॥ २ ॥
उपमारूपकं चान्यदुपमेयोपमामपि ।
सहोक्तिपरिवृत्ती च ससन्देहमनन्वयम् ॥ ३ ॥
उत्प्रेक्षावयवं चान्ये संसृष्टमपि चापरे ।
भाविकत्वं च निजगुरलङ्कारं सुमेधसः ॥ ४ ॥
प्रेयो गृहागतं कृष्णमवादीद्विदुरो यथा ।
अद्य या मम गोविन्द जाता त्वयि गृहागते ।
कालेनैषा भवेत् प्रीतिस्तवैवागमनात् पुनः ॥ ५ ॥
रसवद् दर्शितस्पष्टशृङ्गारादिरसं यथा ।
देवी समागमद् धर्ममस्करण्यतिरोहिता ॥ ६ ॥
ऊर्जस्वि कर्णेन यथा पार्थाय पुनरागतः ।
द्विः सन्दधाति किं कर्णः शल्येत्यहिरपाकृतः ॥ ७ ॥
पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।
उवाच रत्नाहरणे चैद्यं शार्ङ्गधनुर्यथा ॥ ८ ॥
गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनः ।

न भुञ्जते ।द्विजास्तच्च रसदाननिवृत्तये ॥ ९ ॥
समाहितं राजमित्रे यथा क्षत्रिययोषिताम् ।
रामप्रसक्त्यै यान्तीनां पुरोऽदृश्यत नारदः ॥१०॥
उदात्त[1]शक्तिमान् रामो गुरुवाक्यानुरोधकः ।
विहायोपन[2]तं राज्यं यथा वनमुपागमत् ॥ ११ ॥
एतदेवापरेऽन्येन व्याख्यानेनान्यथा विदुः ।
नानारत्नादियुक्तं यत्तत् किलोदात्तमुच्यते ॥१२॥
चाणक्यो नक्तमुपयान्नन्दक्रीडागृहं यथा ।
शशिकान्तोपलच्छन्नं विवेद पयसां ग(क ?)णैः ॥१३॥
उपमानेन यत्तत्त्वमुपमेयस्य साध्यते ।
गुणक्रियाभ्यां नाम्ना च श्लिष्टं तदभिधीयते ॥ १४ ॥
लक्षणं रूपकेऽपीदं लक्ष्यते काममत्र तु ।
इष्टः प्रयोगो युगपदुपमानोपमेययोः ॥१५॥
शीकराम्भोमदसृजस्तुङ्गा जलददन्तिनः ।
इत्यत्र मेघकरिणां निर्देशः क्रियते समम् ॥१६॥
श्लेषादेवार्थवचसोरस्य च क्रियते भिदा ।
तत्सहोक्त्युपमाहेतुनिर्देशा[3]त् क्रमशो यथा ॥ १७ ॥
छायावन्तो गतव्यालाः स्वारोहाः फलदायिनः ।

---

१. उदात्तं-ग । २. पवनं-ग ।
३ हेतुर्निर्देशा-घ ।

मार्गद्रुमा महान्तश्च परेषामेव भूतये ॥ १८ ॥
उन्नतालोकदयिता महान्तः प्राज्यवर्षिणः ॥
शमयन्ति क्षितेस्तापं सुराजानो घना इव ॥ १९ ॥
रत्नवत्त्वादगाधत्वात् स्वमर्यादाविलङ्घनात् ।
बहुसत्त्वाश्रयत्वाच्च सदृशत्वमुदन्वता ॥ २० ॥
अपह्नुतिरभीष्टा च किञ्चिदन्तर्गतोपमा ।
भूतार्थापह्नवादस्याः क्रियते चाभिधा यथा ॥ २१ ॥
नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः ।
अयमाकृष्यमाणस्य[1] कन्दर्पधनुषो ध्वनिः ॥ २२ ॥
एकदेशस्य विगमे या गुणान्तरसंस्थितिः ।
विशेषप्रथनायासौ विशेषोक्तिर्मता यथा ॥ २३ ॥
स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥ २४ ॥
गुणस्य वा क्रियाया वा विरुद्धान्यक्रियाभिधा ।
या विशेषाभिधानाय विरोधं तं विदुर्बुधाः ॥२५॥
उपान्तरूढोपवनच्छायाशीतापि धूरसौ ।
विदूरदेशानपि वः सन्तापयति विद्विषः ॥ २६ ॥
न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया ।
तुल्यकार्यक्रियायोगादित्युक्ता तुल्ययोगिता ॥ २७ ॥

१ आक्रन्दमानस्म-ग ।

शेषो हिमगिरिस्त्वं च महान्तो गुरवः स्थिराः ।
यदलङ्घितमर्यादाश्चलन्तीं विभृथ[1] क्षितिम् ॥२८॥
अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः ।
अप्रस्तुतप्रशंसेति सा चैवं कथ्यते यथा ॥ २९ ॥
प्रीणितप्रणयि स्वादु काले परिणतं बहु ।
विना पुरुषकारेण फलं पश्यत शाखिनाम् ॥ ३० ॥
दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यताम् ।
किञ्चिद्विधित्सोर्या निन्दा व्याजस्तुतिरसौ यथा ॥३१॥
रामः सप्ताभिनत् सा(ता?)लान् गिरिं क्रौञ्चं भृगूत्तमः ।
शतांशेनापि भवता किं तयोः सदृशं कृतम् ॥३२॥
क्रिययैव विशिष्टस्य तदर्थस्योपदर्शनात् ।
ज्ञेया निदर्शना नाम यथेववतिभिर्विना ॥ ३३ ॥
अयं मन्दद्युतिर्भास्वानस्तं प्रति यियासति ।
उदयः पतनायेति श्रीमतो बोधयन्नरान् ॥ ३४ ॥
उपमानेन तद्भावमुपमेयस्य साधयत् ।
यां वदत्युपमामेतदुपमारूपकं यथा ॥ ३५ ॥
समग्रगगनायाममानदण्डो रथाङ्गिनः ।
पादो जयति सिद्धस्त्रीमुखेन्दुनवदर्पणः ॥३६॥
उपमानोपमेयत्वं यत्र पर्यायतो भवेत् ।

---

१ विभ्रति-क ।

उपमेयोपमां नाम ब्रुवते तां यथोदिताम् ॥३७॥
सुगन्धि नयनानन्दि मदिरामदपाटलम् ।
अम्भोजमिव वक्त्रं ते त्वदास्यमिव पङ्कजम् ॥३८॥
तुल्यकाले क्रिये यत्र वस्तुद्वयसमाश्रये ।
पदेनैकेन कथ्येते सहोक्तिः सा मता यथा ॥३९॥
हिमपाताविलदिशो गाढालिङ्गनहेतवः ।
वृद्धिमायान्ति यामिन्यः कामिनां प्रीतिभिः सह॥४०॥
विशिष्टस्य यदादानमन्यापोहेन वस्तुनः ।
अर्थान्तरन्यासवती परिवृत्तिरसौ यथा ॥ ४१ ॥
प्रदाय वित्तमर्थिभ्यः स यशोधनमादितः ।
सतां विश्वजनीनानामिदमस्खलितं व्रतम् ॥ ४२ ॥
उपमानेन तत्त्वं च भेदं च वदतः पुनः ।
ससन्देहं वचः स्तुत्यै ससन्देहं विदुर्यथा ॥ ४३ ॥
किमयं शशी न स दिवा विराजते
कुसुमायुधो न धनुरस्य कौसुमम् ।
इति विस्मयाद्विमृशतोऽपि मे मति-
स्त्वयि वीक्षते न लभतेऽर्थनिश्चयम् ॥४४॥
यत्र तेनैव तस्य स्यादुपमानोपमेयता ।
असादृश्यविवक्षातस्तमित्याहुरनन्वयम् ॥ ४५ ॥

ताम्बूलरागवलयं स्फुरद्दशनदीधिति ।

इन्दीवराभनयनं तवेव वदनं तव ॥ ४६ ॥
श्लिष्टस्यार्थेन संयुक्तः किञ्चिदुत्प्रेक्षयान्वितः।
रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथा ॥ ४७ ॥
तुल्योदयावसानत्वाद् गतेऽस्तं प्रति भास्वति।
वासाय वासरः क्लान्तो विशतीव तमोगृहम् ॥४८॥
वरा विभूषा संसृष्टिर्बह्वलङ्कारयोगतः।
रचिता रत्नमालेव सा चैवमुदिता यथा ॥ ४९ ॥
गाम्भीर्यलाघववतोर्युवयोः प्राज्यरत्नयोः।
सुखसेव्यो जनानां त्वं दुष्टग्राहोऽम्भसां पतिः ॥५०॥
अनलङ्कृतकान्तं ते वदनं वनजद्युति।
निशाकृतैः[1] प्रकृत्यैव चारोः का वास्त्यलङ्कृतिः ॥५१॥
अन्येषामपि कर्त्तव्या संसृष्टिरनया दिशा।
कियदुद्घाट्टितज्ञेभ्यः शक्यं कथयितुं मया ॥ ५२ ॥
भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम्।
प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः ॥५३॥
चित्रोदात्ताद्भुतार्थत्वं कथायाः स्वभिनीतता[2]।
शब्दानाकुलता चेति तस्य हेतुं प्रचक्षते ॥५४॥
आशीरपि च केषाञ्चिदलङ्कारतया मता।
सौहृदय्या(स्या?)विरोधोक्तौ प्रयोगोऽस्याश्च तद्यथा ॥५५॥

१ निशाकृतं-ग। २ स्वविनीतता-घ।

अस्मिन् जहीहि सुहृदि प्रणयाभ्यसूया-
माश्लिष्य गाढममुमानतमादरेण ।
विन्ध्यं महानिव घनः समयेऽभिवर्ष-
न्नानन्दजैर्नयनवारिभिरुक्षतु त्वाम् ॥ ५६ ॥

मदान्धमातङ्गविभिन्नसाला
हतप्रवीरा द्रुतभीतपौराः ।
त्वत्तेजसा दग्धसमस्तशोभा
द्विषां पुरः पश्यतु राजलोकः ॥ ५७ ॥

गिरामलङ्कारविधिः सविस्तरः
स्वयं विनिश्चित्य धिया मयोदितः ।
अनेन वागर्थविदामलङ्कृता
विभाति नारीव विदग्धमण्डना ॥ ५८ ॥

इति भामहालङ्कारे तृतीयः परिच्छेदः ॥

# अथ चतुर्थः परिच्छेदः॥

अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम्।
शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धि च ॥ १ ॥
देशकालकलालोकन्यायागमविरोधि च।
प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टं च नेष्यते ॥ २ ॥
अपार्थमित्यपेतार्थं स चार्थः पदवाक्ययोः।
अर्थवान् वर्णसंघातः सुप्तिङन्तं पदं पुनः ॥ ३ ॥
पदानामेव संघातः सापेक्षाणां परस्परम्।
निराकाङ्क्षं च तद्वाक्यमेकवस्तुनिबन्धनम् ॥ ४ ॥
क्रमवृत्तिषु वर्णेषु संघातादि न युज्यते।
बुद्धौ तु सम्भवत्येतदन्यत्वेऽपि प्रतिक्षणम् ॥ ५ ॥
धीरन्त्यशब्दविषया वृत्तवर्णाहितस्मृतिः[1]।
वाक्यमित्याहुरपरे न शब्दाः क्षणनश्वराः ॥ ६ ॥
अत्रापि बहु वक्तव्यं जायते तत्तु नोदितम्।
गुरुभिः किं विवादेन यथाप्रकृतमुच्यते ॥ ७ ॥
समुदायार्थशून्यं यत्तदपार्थकमिष्यते।
दाडिमानि दशाऽपूपाः षडित्यादि यथोदितम् ॥ ८ ॥

---

१ धीरन्त्यशब्दविषयावृत्तवर्णाहितस्मृतिः–ग०।

निरुद्धार्थं मतं व्यर्थं विरुद्धं तूपदिश्यते ।
पूर्वाऽपरार्थव्याघाताद्विपर्ययकरं यथा ॥ ९ ॥
सखि मानं प्रिये धेहि लघुतामस्य मा गमः ।
भर्तुश्छन्दानुवर्त्तिन्यः प्रेम घ्नन्ति न हि स्त्रियः ॥१०॥
उपासितगुरुत्वारत्वं विजितेन्द्रियशत्रुषु ।
श्रेयसो विनयाधानमधुना तिष्ठ केवलम् ॥ ११ ॥
यदभिन्नार्थमन्योन्यं तदेकार्थं प्रचक्षते ।
पुनरुक्तमिदं प्राहुरन्ये शब्दार्थभेदतः ॥ १२ ॥
न शब्दपुनरुक्तं तु स्थौल्यादत्रोपवर्ण्यते ।
कथमाक्षिप्तचित्तः सन्नुक्तमेवाऽभिधास्यते ॥ १३ ॥
भयशोकाभ्यसूयासु हर्षविस्मययोरपि ।
यथाह गच्छ गच्छेति पुनरुक्तं च[2] तद्विदुः ॥ १४ ॥
अत्रार्थपुनरुक्तं यत्तदेवैकार्थमिष्यते ।
उक्तस्यपुनराख्याने कार्यासम्भवतो यथा ॥ १५ ॥
तामुत्कमनसं नूनं करोति ध्वनिरम्भसाम् ।
सौधेषु घनमुक्तानां प्रणालीमुखपातिनाम् ॥ १६ ॥
श्रुतेः सामान्यधर्माणां विशेषस्याऽनुदाहृतेः ।
अप्रतिष्ठं यदेकत्र[3] तज्ज्ञानं संशयं विदुः ॥ १७ ॥

---

१ विरूद्धार्थम्-ग०
२ न-ग० ।    ३ यदत्रैज्ज्ञानं ( यदेकत्र तज्ज्ञानं ? )-ग० ।

सशंसयमिति प्राहुस्ततस्तज्जननं वचः ।
इष्टं निश्चितये वाक्यं न वेलायेति (वेलायति?) तद्यथा १८
व्यालवन्तो दुरारोहा रत्नवन्तः फलान्विताः ।
विषमा भूभृतस्तेभ्यो भयमाशु प्रमादिनाम् ॥ १९ ॥
यथोपदेशं क्रमशो निर्देशोऽत्र क्रमो मतः ।
तदपेतं विपर्यासादित्याख्यातमपक्रमम् ॥ २० ॥
विदधानौ किरीटेन्दू श्यामाभ्रहिमसच्छवी ।
रथाङ्गशूले बिभ्राणौ पातां वः शम्भुशार्ङ्गिणौ ॥ २१ ॥
सूत्रकृत्पादकारेष्टप्रयोगाद्योऽन्यथा भवेत् ।
तमाप्तश्रावकाः सिद्धेः[1] शब्दहीनं विदुर्यथा ॥ २२ ॥
स्फुरत्तडिद्वलयिनो विततास्भोगरीयसः ।
तेजस्तिरयतः सौरं घनान् पश्य दिवाऽभितः[2] ॥ २३ ॥
यतिश्छन्दो[3] निरूढानां[4] शब्दानां या विचारणा ।
तदपेतं यतिभ्रष्टमिति निर्दिश्यते यथा ॥ २४ ॥
विद्युत्वन्तस्तमालासितवपुष इमे वारिवाहा ध्वनन्ति ।
गुरोर्लघोश्च वर्णस्य योऽस्थाने रचनाविधिः ।
तन्न्यूनाधिकता वापि भिन्नवृत्तमिदं यथा ॥ २५ ॥
भ्रमति भ्रमरमाला काननेषून्मदासौ ।
विरहितरमणीकोऽर्हस्यद्य गन्तुम् ॥ २६ ॥

---

१ तमाप्तश्रावकासिद्धेः-घ० । २ दिवोऽभितः-घ० ।
३ यतिश्छन्दो-घ० । ४ ऽधिरूढानां-क० ।

कान्ते इन्दुशिरोरत्ने आदधाने उदंशुनी ।
पातां वः शम्भुशर्वाण्याविति प्राहुर्विसन्ध्यदः ॥२७॥
या देशे द्रव्यसंभूतिरपि वा नोपदिश्यते ।
तत्तद्विरोधि विज्ञेयं स्वभावात्तद्यथोच्यते ॥२८॥
मलये कन्दरोपान्तरूढकालागुरुद्रुमे ।
सुगन्धिकुसुमानम्रा राजन्ते देवदारवः ॥२९॥
षण्णामृतूनां भेदेन कालः षोढेव भिद्यते ।
तद्विरोधकृदित्याहुर्विपर्यासादिदं यथा ॥ ३० ॥
उदूढ[1]शिशिरासारान् प्रावृषेण्यान् नभस्वतः ।
फुल्लाः सुरभयन्तीमे चूताः काननशोभिनः ॥३१॥
कला सङ्कलनाप्रज्ञा[2] शिल्पान्यस्याश्च गोचरः ।
विपर्यस्तं तथैवाहुस्तद्विरोधकरं यथा ॥३२॥
ऋषभात्पञ्चमात्तस्मात् सषड्जं धैवतं स्मृतम् ।
अयं हि मध्यमग्रामो मध्यमोत्पीडितर्षभः ॥३३॥
इति सा धारितं मोहादन्यथैवा[3]ऽवगच्छति ।
अन्यास्वपि कलास्वेवमभिधेया विरोधिता ॥ ३४ ॥
स्थास्नुजङ्गमभेदेन लोकं तत्त्वविदो विदुः ।
स च तद्व्यवहारोऽत्र तद्विरोधकरं यथा ॥३५॥

---

१ उदूद-घ० ।   २ प्रज्ञाः-घ० ।
३ अन्यथेव-घ० ।

तेषां कटतटभ्रष्टैर्गजानां मदबिन्दुभिः ।
प्रावर्त्तत नदी घोरा हस्त्यश्वरथवाहिनी ॥३६॥
धावतां सैन्यवाहानां फेनवारि मुखच्युतम् ।
चकार जानुदघ्नापान् प्रतिदिङ्मुखमध्वनः ॥३७॥
न्यायः शास्त्रं त्रिवर्गोक्तिर्दण्डनीतिं च तां विदुः ।
अतो न्यायविरोधीष्टमपेतं यत्तया यथा ॥३८॥
विजिगीषुमुपन्यस्य वत्सेशं वृद्धदर्शनम् ।
तस्यैव कृतिनः पश्चादभ्यधाच्चार[1]शून्यताम् ॥३९॥
अन्तर्योधशता[2]कीर्णं सालङ्कायननेतृकम्[3] ।
तथाविधं गजच्छद्म नाऽज्ञासीत् स स्वभूगतम् ॥४०॥
यदि वोपेक्षितं तस्य सचिवैः स्वार्थसिद्धये ।
अहो नु मन्दिमा तेषां भक्तिर्वा नास्ति भर्तरि ॥४१॥
शरा दृढधनुर्मुक्ता मन्युमद्भिररातिभिः ।
मर्माणि परिहृत्याऽस्य पतिष्यन्तीति काऽनुमा ॥४२॥
हतोऽनेन मम भ्राता मम पुत्रः पिता मम ।
मातुलो भागिनेयश्च रुषा संरब्धचेतसः ॥४३॥
अस्यन्तो विविधान्याऽऽजावायुधान्यपराधिनम् ।
एकाकिनमरण्यान्यां न हन्युर्बहवः कथम् ॥४४॥

---

१ पा (चा ?)—ग० ।　२ अन्तर्योधं शताकीर्णं-घ० ।
३ नेत्र कम्-ग, नेत्रकम् क० ।

नमोऽस्तु तेभ्यो विद्वद्भ्यो येऽभिप्रायं कवेरिमम्।
शास्त्रलोकावपास्यैव नयन्ति नयवेदिनः ॥४५॥
सचेतसो वनेभस्य चर्मणा निर्मितस्य च।
विशेषं वेद बालोऽपि कष्टं किं नु कथं नु तत् ॥४६॥
आगमो धर्मशास्त्राणि लोकसीमा च तत्कृता।
तद्विरोधि तदाचारव्यतिक्रमणतो यथा ॥४७॥
भ्रूभृतां पीतसोमानां न्याय्ये वर्त्मनि तिष्ठताम्।
अलङ्करिष्णुना वंशं गुरौ सति जिगीषुणा ॥४८॥
अभार्योढेन संस्कारमन्तरेण द्विजन्मना।
नरवाहनदत्तेन वेश्यावान् निशि पीडितः ॥४९॥
न दूषणायाऽयमुदाहृतो विधि-
र्न चाभिमानेन किमु प्रतीयते।
कृतात्मनां तत्त्वदृशां च मादृशो
जनोऽभिसन्धिं क इवाऽवभोत्स्यते ॥ ५० ॥

इति श्रीभामहालङ्कारे चतुर्थः परिच्छेदः।

---

१ तु-क०।

# अथ पञ्चमः परिच्छेदः ।

अथ प्रतिज्ञाहेत्वादिहीनं दुष्टं च वर्ण्यते ।
समासेन यथान्यायं तन्मात्रार्थप्रतीतये ॥ १ ॥
प्रायेण दुर्बोधतया शास्त्राद् विभ्यत्यमेधसः ।
तदुपच्छन्दनायैष हेतुन्यायलवोच्चयः ॥ २ ॥
स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते ।
प्रथमालीढमधवः पिबन्ति कटु भेषजम् ॥ ३ ॥
न स शब्दो न तद्वाच्यं[2] न स न्यायो न सा कला[1] ।
जायते यन्न काव्याङ्गमहो भारो महान् कवेः ॥ ४ ॥
सत्त्वादयः प्रमाणाभ्यां प्रत्यक्षमनुमा च ते ।
असाधारणसामान्यविषयत्वं तयोः किल ॥ ५ ॥
प्रत्यक्षं कल्पनापोढं ततोऽर्थादिति केचन ।
कल्पनां नाम जात्यादियोजनां प्रतिजानते[3] ॥ ६ ॥
समारोपः किलैतावान् सदर्थालम्बनं च तत् ।
जात्याद्यपोहे वृत्तिः क क विशेषः कुतश्च सः ॥ ७ ॥
तदपोहेषु च तथा सिद्धा सा बद्धिगोचरा ।
अवस्तुकं चेद्वितथं[4] प्रत्यक्षं तत्त्ववृत्ति हि ॥ ८ ॥

१ 'वलो'-क० । २ तद्वाक्यं-क० । ३ प्रतिजन्यते-घ० । ४ द्वितयं-घ० ।

ग्राह्यग्राहकभेदेन विज्ञानांशो मतो यदि ।
विज्ञानमत्र सादृश्याद्विशेषोऽस्यं[1] विकल्पना ॥ ९ ॥
अर्थादेवेति रूपादेस्तत एवेति नान्यतः[2] ।
अन्यथा[3] घटविज्ञानमन्येन व्यपदिश्यते ॥ १० ॥
त्रिरूपाल्लिङ्गतो ज्ञानमनुमानञ्च केचन[4] ।
तद्विदो नान्तरीयार्थदर्शनं चाऽपरं विदुः ॥ ११ ॥
विविधास्पदधर्मेण धर्मीकृतविशेषणः ।
पक्षस्तस्य च निर्देशः प्रतिज्ञेत्यभिधीयते ॥ १२ ॥
तदर्थहेतुसिद्धान्तसर्वागमविरोधिनी ।
विरुद्ध[5]धर्मा प्रत्यक्षबाधिनी[6] चेति दुष्यति ॥ १३ ॥
तयैव हि तदर्थस्य विरोधकरणं यथा ।
यतिर्मम पिता बाल्यात् सूनुर्यस्याऽहमौरसः ॥ १४ ॥
अस्त्या[7]त्मा प्रकृतिर्वेति ज्ञेया हेत्वपवादिनी ।
धर्मिणोऽस्याऽप्रसिद्धत्वात्तद्धर्मोऽपि[8] न सेत्स्यति ॥ १५ ॥
शाश्वतोऽशाश्वतो वेति प्रसिद्धे धर्मिणि ध्वनौ ।
ज्ञायते भेदविषयो विवादो वादिनोर्मिथः[9] ॥ १६ ॥

---

१ ०स (स्य ? )-ग० । २ न्यायतः-ग० ।
३ अन्यदा-ख, घ० । ४ केन च ( केचन ? )-ग० ।
५ प्रसिद्ध-ग० । ६ वादिनी-ख. घ० ।
७ अस्यात्मा-ग० । ८ तदर्थोऽपि-क०
९ वादिनो मिश्रः-घ, धादिनो मिश्रः-क०

स्वसिद्धान्तविरोधित्वाद्विज्ञेया तद्विरोधिनी ।
कणभक्षो यथा शब्दमाचक्षीताऽविनश्वरम् ॥१७॥
सर्वशास्त्रविरुद्धत्वात्सर्वागमविरोधिनी ।
यथा शुचिस्तनुः स्त्रैणी तत्प्रमाणानि सन्ति वा[1] ॥१८॥
आकुमारमसन्दिग्धधर्माहितविशेषणा ।
प्रसिद्धधर्मेति मता श्रोत्रग्राह्यो ध्वनिर्यथा ॥ १९ ॥
प्रत्यक्षबाधिनी तेन प्रमाणेनैव बाध्यते ।
यथा शीतोऽनलो नास्ति रूप[2]मुष्णः क्षपाकरः ॥२०॥
सन् पक्षे[3] सदृशे सिद्धो व्यावृत्तस्तद्विपक्षतः ।
हेतुस्त्रिलक्षणो ज्ञेयो हेत्वाभासो विपर्ययात् ॥ २१ ॥
सन् द्वयोरिति यः सिद्धः स्वपक्षपरपक्षयोः ।
अभिन्नलक्षणः पक्षः फलभेदादयं द्विधा ॥ २२ ॥
परपक्षानुपादानं तद्वृत्तेश्चानुदाहृतौ ।
कथमन्यतरासिद्धहेत्वाभासव्यवस्थितिः ॥ २३ ॥
साध्यधर्मानुगमतः सदृशस्तत्र यश्च सन् ।
अन्योऽप्यसावेक इव सामान्यादुपचर्यते ॥ २४ ॥
विपक्षस्तद्विसदृशो व्यावृत्तस्तत्र यो ह्यसन् ।
इति द्वयैकानुगतिर्व्यावृत्तिर्लक्ष्मसाधुता[4] ॥ २५ ॥

१ यथा शुचिस्तनुस्त्रीणि प्रमाणानि (न ?) सन्ति वा-ग० ।
२ कूप-क० । ३ द्वयो-ग० ।
४ इति द्वयैकानुगतिव्यावृत्ती लक्ष्मसाधुना-घ०

साध्यसाधनधर्माभ्यां सिद्धो दृष्टान्त उच्यते ।
तद्विपर्ययतो वापि तदाभस्तदवृत्तितः ॥ २६ ॥
साध्येन लिङ्गानुगतिस्तदभावे च नास्तिता ।
ख्याप्यते येन दृष्टान्तः स किलान्यैर्द्विधोच्यते ॥ २७ ॥
दूषणन्यूनताद्युक्तिर्न्यूनं हेत्वादिनाऽत्र[1] च ।
तन्मूलत्वात्कथायाश्च न्यूनं नेष्टं प्रतिज्ञया ॥ २८ ॥
जातयो दूषणाभासास्ताः साधर्म्यसमादयः ।
तासां प्रपञ्चो बहुधा भूयस्त्वादिह नोदितः ॥ २९ ॥
अपरं वक्ष्यते न्यायलक्षणं काव्यसंश्रयम् ।
इदं तु शास्त्रगर्भेषु काव्येष्वभिहितं यथा ॥ ३० ॥
अथ नित्याऽविनाभावि दृष्टं जगति कारणम् ।
कारणं चेन्न तन्नित्यं नित्यं चेत्[2] कारणं न तत् ॥ ३१ ॥
लक्ष्मप्रयोगदोषाणां भेदेनानेकवर्त्मना[3] ।
सन्धादिसाधनं सिद्ध्यै शास्त्रेषूदितमन्यथा ॥ ३२ ॥
तज्ज्ञैः काव्यप्रयोगेषु तत्प्रादुष्कृतमन्यथा ।
तत्र लोकाश्रयं काव्यमागमास्तत्त्वशंसिनः[4] ॥ ३३ ॥
असिसङ्काशमाकाशं शब्दो दूरानुपात्ययम् ।
तदेव वाऽपि सिन्धूनामहो स्थेमा महार्च्चिषः ॥ ३४ ॥

---

१ ऽथ-ग० । २ नित्यश्चेत्—घ० ।
३ ०न-क । ४ दर्शिनः ग० ।

रूपादीनां यथा द्रव्यमाश्रयो नश्वरीति या ।
इष्टकार्याभ्युपगमं प्रतिज्ञां प्रतिजानते ॥ ३५ ॥
धर्मार्थकामकोपानां संश्रयात् सा चतुर्विधा ।
जरामेष बिभर्मीति प्रतिज्ञाय पितुर्यथा ॥
तथैव पुरुणाभारि सा स्याद्धर्मनिबन्धनी ॥ ३६ ॥
उपलप्स्ये स्वयं सीतामिति भर्तृनिदेशतः ।
हनूमता प्रतिज्ञाय सा ज्ञातेत्यर्थसंश्रया ॥ ३७ ॥
आहरिष्याम्यमुमद्य महासेनात्मजामिति ।
कृत्वा प्रतिज्ञां वत्सेन हृतेति मदनाश्रया ॥ ३८ ॥
भ्रातुर्भ्रातृव्यमून्मथ्य पास्याम्यस्याऽसृगाहवे ।
प्रतिज्ञाय यथा भीमस्तच्चकाराऽवशो रुषा ॥ ३९ ॥
कार्योऽन्यत्र प्रतिज्ञायाः प्रयोगो न कथञ्चन ।
परित्यागस्य कर्तव्यो नासां चतसृणामपि ॥ ४० ॥
प्रायोपवेशाय यथा प्रतिज्ञाय सुयोधनः ।
राज्याय पुनरुत्तस्थाविति धर्मविरोधिनी ॥ ४१ ॥
आहूतो न निवर्तेयं[1] द्यूतायेति युधिष्ठिरः ।
कृत्वा सन्धां शकुनिना दिदेवेत्यर्थबाधिनी ॥ ४२ ॥
अद्यारभ्य निवत्स्यामि मुनिवद् वचनादिति ।
पितुः प्रियाय यां भीष्मश्चक्रे सा कामबाधिनी ॥ ४३ ॥

१ निवर्तेऽहं-ग ।

अत्याजयद्यथा रामः सर्वक्षत्त्रवधाश्रयाम् ।
जामदग्न्यं युधा जित्वा सा ज्ञेया कोपबाधिनी ॥४४॥
अथाऽभ्युपगमप्राप्तिः सन्धाऽभ्युपगमाद्विना ।
अनुक्तमपि यत्रार्थादभ्युपैति यथोच्यते ॥ ४५ ॥
किमिन्द्रियद्विषां ज्ञेयं को निराकृतयेऽरिभिः ।
को वा मत्वरमर्थिभ्यो न यच्छति धनं लघु ॥४६॥
किमत्ययं तु यः क्षेपः सौकर्य्यं दर्शयत्यसौ ।
हेतुस्त्रिलक्ष्मैव मतः काव्येष्वपि सुमेधसाम् ॥ ४७ ॥
अन्वयव्यतिरेकौ हि केवलावर्थसिद्धये ।
यथाऽभितो वनाभोगमेतदस्ति महत्सरः ॥ ४८ ॥
कूजनात्कुरराणां च कमलानां च सौरभात् ।
अन्यधर्मोऽपि तत्सिद्धिं सम्बन्धेन करोत्ययम् ॥४९॥
धूमादभ्रङ्कषात्साग्नेः प्रदेशस्यानुमामिव ।
अपृथक्कृतसाध्योऽपि हेतुश्चात्र प्रतीयते ॥ ५० ॥
अन्वयव्यतिरेकाभ्यां विनैवार्थगतिर्यथा ।
दीप्रदीपा निशा जज्ञे व्यपवृत्तदिवाकरा ॥ ५१ ॥
हेतुप्रदीपदीपत्वमपवृत्तौ रवेरिह ।
तस्याऽपि सुधियामिष्टा दोषाः प्रागुदितास्त्रयः ॥५२॥
अज्ञानसंशयज्ञानविपर्ययकृतो यथा ।

---

१ यथा-घ ।  २ द्विपां-क ।  ३ ०का०-क ।

काशा हरन्ति हृदयममी कुसुमसौरभात्[1] ॥ ५३ ॥
अपामभ्यर्णवर्त्तित्वादेते ज्ञेयाः शरारवः ।
असौ शुक्लान्तनेत्रत्वाच्चकोर इति गृह्यताम् ॥ ५४ ॥
तुल्यजातावदृष्टत्वात्साधयत्यचकोरताम् ।
उक्तस्याऽर्थस्य दृष्टान्तं[2] प्रतिबिम्बनिदर्शनम् ॥ ५५ ॥
ननूपमानमेवास्तु न हेत्वनभिधानतः ।
साध्यसाधनयोरुक्तिरुक्तादन्यत्र नेष्यते ॥ ५६ ॥
मुखं पद्ममिवेत्यत्र किं साध्यं किञ्च साधनम् ॥
इति प्रयोगस्य यथा कलावपि भवानिह ।
श्रेयान् वृद्धानुशिष्टत्वात् पूर्वे कार्तयुगे यथा ॥५७॥
यत्र दृष्टान्तमात्रेण व्यज्येते साध्यसाधने ।
तमाहुः शुद्धदृष्टान्तं तन्मात्राविष्कृतेर्यथा ॥ ५८ ॥
भरतस्त्वं दिलीपस्त्वं त्वमेवैलः पुरूरवाः ।
त्वमेव वीर प्रद्युम्नस्त्वमेव नरवाहनः ॥ ५९ ॥
कथमेकपदेनैव व्यज्येरन्नस्य ते गुणाः ।
इति प्रयुञ्जते सन्तः केचिद्विस्तरभीरवः ॥ ६० ॥
पदमेकं परं साधु नार्वाचीनं निबन्धनम् ।
वैपरीत्याद्विपर्यासं कीर्तेरपि करोति तत् ॥ ६१ ॥
अहृद्यमसुभ(नि?)भेदं रसवत्त्वेऽप्यपेशलम् ।

१ सौहृदात्-क । २ दृष्टान्तं-घ ।

काव्यं कपित्थमाम्रं त्वत(मंच?)केषाञ्चित्सदृशं यथा॥ ६२॥

प्रजाजनश्रेष्ठवरिष्ठभूभृ-
च्छिरोचिताङ्घ्रेः पृथुकीर्तिधिष्ण्यं[1] ।
अहिम्नपद्मस्य[2] जलारिधाम्न-
स्तवैव नान्यस्य सुतस्य वृत्तम् ॥ ६३ ॥

अंशुमद्भिश्च मणिभिः फलनिम्नैश्च शाखिभिः ।
फुल्लैश्च कुसुमैरन्यैर्वाचोऽलङ्कुरुते यथा ॥ ६४ ॥

शुभमरकतपद्मरागचित्रे
सफलसपल्लवभूरिचारुवृत्ते ।
बहुकुसमविभूषिते स तस्थौ
सुरमुनिसिद्धयुते सुमेरुपृष्ठे ॥ ६५ ॥

तदेभिरङ्गैर्भूष्यन्ते भूषणोपवनस्रजः ।
वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते ॥ ६६ ॥

विरुद्धपदमस्वर्थं बहुपूरणमाकुलम् ।
कुर्वन्ति काव्यमपरे व्यायताभीप्सया यथा ॥ ६७ ॥

एलातक्कोलनागस्फुटबकुललताचन्दनस्यन्दनाढ्य-
सृक्काकर्पूरचक्रागुरुमनःशिलाध्यामकाव्यात्ततीरः ।
शङ्खव्राताकुलान्तस्तिमिमकरकुलाकीर्णवीचीप्रतानो
दध्रे यस्याऽम्बुराशिः शशिकुमदसुधाक्षीरशुद्धां सुकीर्तिम् ॥ ६८॥

१ धिष्ण्यः-घ । २ य०-घ ।

इति निगदितास्तास्ता वाचामलङ्कृतयो मया
बहुविधकृतीर्दृष्ट्वाऽन्येषां स्वयं परितर्क्य च ।
प्रथितवचसः सन्तोऽभिज्ञाः प्रमाणमिहापरे
गुरुतरधियामस्त्वाराधं मनोऽकृतबुद्धिभिः ॥ ६९ ॥

इति श्रीभामहालङ्कारे पञ्चमः परिच्छेदः ।



# अथ षष्ठः परिच्छेदः ।

सूत्राम्भसं पदावर्त्तं पारायणरसातलम् ।
धातूणादिगणग्राहं ध्यानग्रहबृहत्प्लवम् ॥ १ ॥
धीरैरालोकितप्रान्तममेधोभिरसूयितम् ।
सदोपभुक्तं सर्वाभिरन्यविद्याकरेणुभिः ॥ २ ॥
नापारयित्वा दुर्गाधममुं व्याकरणार्णवम् ।
शब्दरत्नं स्वयङ्गम(म्य?) मलङ्कर्तुमयं जनः ॥ ३ ॥
तस्य चाऽधिगमे यत्नः कार्यः काव्यं विधित्सता ।
परप्रत्ययतो यत्तु क्रियते तेन का रतिः ॥ ४ ॥
नाऽन्यप्रत्ययशब्दा वाग– – –मुदे सताम् ।
परेण धृतमुक्तेव सरसा कुसुमावली ॥ ५ ॥
मुख्यस्तावदयं न्यायो यत स्वशक्त्या प्रवर्तते ।
अन्[१]ये सारस्वता नाम सन्त्यन्योक्तानुवादिनः ॥ ६ ॥
प्रतीतिरर्थेषु य[२]तस्तं शब्दं ब्रुवतेऽपरे ।
धूमभासोरपि प्राप्ता शब्दताऽन्यानुमां प्रति ॥ ७ ॥
नन्वकारादिवर्णानां समुदायोऽभिधेयवान् ।
अर्थप्रतीतये गीतः शब्द इत्यभिधीयते ॥ ८ ॥

---

१ अन्ध–ग० । २ च यस्तं–घ ।

प्रत्येकमसमर्थानां समुदायोऽर्थवान् कथम् ।
वर्णानां क्रमवृत्तित्वान् न्याय्या नापि च संहतिः ॥९॥
न चापि समुदायिभ्यः समुदायोऽतिरिच्यते ।
दारुभित्तिभुवोऽतीत्य किमन्यत् सद्म कल्प्यते ॥१०॥
तस्मात् कूटस्थ इत्येषा शाब्दी वः कल्पना वृथा ।
प्रत्यक्षमनुमानं वा यत्र तत्परमार्थतः ॥ ११ ॥
शपथैरपि चादेयं वचो न स्फोटवादिनाम् ।
नभःकुसुममस्तीति श्रद्दध्यात् कः सचेतनः ॥ १२ ॥
इयन्त ईदृशा वर्णा ईदृगर्थाभिधायिनः ।
व्यवहाराय लोकस्य प्रागित्थं समयः कृतः ॥ १३ ॥
स कूटस्थोऽनपायी च नादादन्यश्च कथ्यते ।
मन्दाः साङ्केतिकानर्थान् मन्यन्ते पारमार्थिकान् ॥१४॥
विनश्वरोऽस्तु नित्यो वा सम्बन्धोऽर्थेन वा सता ।
नमोऽस्तु तेभ्यो विद्वद्भ्यः प्रमाणं येऽस्य निश्चितौ ॥१५॥
अन्यापोहेन[२] शब्दोऽर्थमाहेत्यन्ये प्रचक्षते ।
[३]अन्यापोहश्च नामाऽन्यपदार्थाऽपाकृतिः किल ॥१६॥
यदि गौरित्ययं शब्दः कृतार्थोऽन्यनिराकृतौ ।
जनको गवि गोबुद्धेर्मृग्यतामपरो ध्वनिः ॥ १७ ॥

---

१ किमन्यं सत्प्रकल्प्यते-घ । अन्यायोहे तु-क ।
३ अन्यापोहश्च नामान्य वा (प?) दार्था व्रा (पा?) कृतिः किल-ग ।

अर्थज्ञानफलाः शब्दा न चैकस्य फलद्वयम् ।
अपवादविधिज्ञाने फले चैकस्य वः कथम् ॥ १८ ॥
पुरा गौरिति विज्ञानं गोशब्दश्रवणाद् भवेत् ।
येनाऽगोप्रतिषेधाय प्रवृत्तो गौरिति ध्वनिः ॥ १९ ॥
वर्णभेदादिदं भिन्नं वर्णाः स्वांशविकल्पतः ।
के शब्दाः किञ्च तद्वाच्यमित्यहो वर्त्म दुस्तरम् ॥२०॥
द्रव्यक्रियाजातिगुणभेदात् ते च चतुर्विधाः ।
यदृच्छाशब्दमप्यन्ये डित्थादि प्रतिजानते ॥ २१ ॥
नानाभाषाविषयिणामपर्यन्तार्थवर्त्तिनाम् ।
इयत्ता केन वाऽमीषां विशेषादवधार्यते ॥ २२ ॥
वक्रवाचां कवीनां ये प्रयोगं प्रति साधवः ।
प्रयोक्तुं ये न युक्ताश्च तद्विवेकोऽयमुच्यते ॥ २३ ॥
नाऽप्रयुक्तं प्रयुञ्जीत चेतःसंमोहकारिणम् ।
तुल्यार्थत्वेऽपि हि ब्रूयात् को हन्ति गतिवाचिनम् ॥२४॥
श्रोत्रादिं न तु दुर्बोधं न दुष्टादिमपेशलम् ।
ग्राम्यं न पिण्डीशूरादिं न डित्थादिमपार्थकम् ॥२५॥
नाऽप्रतीतान्यथार्थत्वं धात्वनेकार्थतावशात् ।
न लेशज्ञापकाकृष्टसंहति ध्याति वा यथा ॥ २६ ॥
न शिष्टैरुक्तमित्येव न तन्त्रान्तरसाधितम् ।
छन्दोवदिति चोत्सर्गान्न चापि च्छान्दसं वदेत् ॥२७॥

क्रमागतं श्रुतिसुखं शब्दमर्थ्यमुदीरयेत् ।
अतिशेते ह्यलङ्कारमन्यं व्यञ्जनचारुता ॥ २८ ॥
सिद्धो यश्चोपसंख्यानादिष्ट्या यश्चोपपादितः ।
तमाद्रियेत प्रायेण न तु योगविभागजम् ॥ २९ ॥
इयं चन्द्रमुखी कन्या प्रकृत्यैव मनोहरा ।
अस्यां सुवर्णालङ्कारः पुष्णाति नितरां श्रियम् ॥३०॥
वृद्धिपक्षं प्रयुञ्जीत सङ्क्रमेऽपि मृजेर्यथा ।
मार्जन्त्यधररागं ते पतन्तो बाष्पबिन्दवः ॥ ३१ ॥
सरूपशेषं तु पुमान् स्त्रिया यत्र च शिष्यते ।
यथाह वरुणाविन्द्रौ भवौ शर्वौ मृडाविति ॥ ३२ ॥
यथा पटयतीत्यादि णिच् प्रातिपदिकात्ततः ।
णाविष्ठवदितीष्ट्या च तथा क्रशयतीत्यपि ॥ ३३ ॥
प्रयुञ्जीताऽव्ययीभावमदन्तं नाप्यपञ्चमि ।
तृतीयासप्तमीपक्षे नालुग्विषयमानयेत् ॥ ३४ ॥
तिष्ठद्गुप्रभृतौ वाच्यौ नक्तंदिवसगोचरौ ।
यथा विद्वानधीतेऽसौ तिष्ठद्गु च वहद्गु च ॥३५॥
शिष्टप्रयोगमात्रेण न्यासकारमतेन वा ।
तृचा समस्तषष्ठीकं न कथञ्चिदुदाहरेत् ॥ ३६ ॥

सूत्रज्ञापकमात्रेण वृत्रहन्ता यथोदितः ।
अकेन च न कुर्वीत वृत्तिं तद्गमको यथा ॥३७॥
पञ्चराजीति च यथा प्रयुञ्जीत द्विगुः स्त्रियाम् ।
नपुंसकं तत्पुरुषं पुरुहूतसभं यथा ॥ ३८ ॥
सर्वेभ्यश्च भृशादिभ्यो वदेल्लुसहलं यथा ।
प्रियोन्मनायते सा ते किं शठाऽभिमनायसे ॥३९॥
तृतीयैकवचः[1] षष्ठ्यामामन्तं च वदेत् क्विपि ।
यथोदितं बलभिदा सुरुचां विद्युतामिव ॥ ४० ॥
असन्तमपि यद्वाक्यं तत्तथैव प्रयोजयेत् ।
यथोच्यतेऽम्भसां भासा यशसामम्भसामिति ॥ ४१ ॥
पुंसि स्त्रियां च[2] कस्वन्तमिच्छन्त्यच्छान्दसं किल ।
उपेयुषामपि दिवं यथा न व्येति चारुता ॥ ४२ ॥
इभकुम्भनिभौ[3] बाला दधुषी कन्तुके[4] स्तनौ ।
रतिखेदपरिश्रान्ता जहार हृदयं नृणाम् ॥ ४३ ॥
शबलादिभ्यो नितरां भाति णिज् विहितो यथा ।
बलाकाः पश्य सुश्रोणि घनाञ्छबलयन्त्यमः ॥४४॥
शिशिरासारकणिकां सदृशस्ते तु कङ्गवत् ।
संवीजयति सुश्रोणि रतिखेदालसेक्षणाम् ॥ ४५ ॥

---

१ तृतीयैव चतुः षष्ठ्या—क । २ पुंस्त्रियां च—ग ।
३ इभकुम्भनिभे—ग । ४ कन्तुकौ—घ ।

एवं णिचः प्रयोगस्तु सर्वत्राऽलङ्कृतिः परा ।
लिङ्गत्रयोपपन्नं च ताच्छील्यविषयं णिनिम् ॥ ४६ ॥
तस्या हारी स्तनाभोगो वदनं हारि सुन्दरम् ।
हारिणी तनुरत्यन्तं कियन्न हरते मनः ॥ ४७ ॥
ताच्छील्यादिषु चेष्यन्ते सर्व एव तृनादयः[1] ।
विशेषणैव[2] तत्रेष्टा युत्कुरज्वरजिष्णुचः ॥ ४८ ॥
क्तिन्नन्तं च प्रयुञ्जीत सङ्गतिः संहतिर्यथा ।
शकारौ जागुरिष्टौ च जागर्या जागरा यथा ॥ ४९ ॥
उपासनेति च युचं नित्यमासेः प्रयोजयेत् ।
ल्युटं च कर्तृविषयं देवनो रमणो यथा ॥ ५० ॥
अण्णान्तादपि ङीबिष्टो लक्ष्मीः पौरन्दरी यथा ।
अण् महारजनाल्लाक्षारोचनाभ्यां तथा च ठक् ॥५१॥
ड्मतुबिष्टं च कुमुदाद्यथेयं भूः कुमुद्वती ।
ठक् चापि तेन जयतीत्याक्षिकः शास्त्रिको यथा ॥५२॥
हितप्रकरणे णं च सर्वशब्दात् प्रयुञ्जते ।
ततश्छमिष्ट्यौ[3] च यथा सार्वः सर्वीय इत्यपि ॥ ५३ ॥
वदेदिमनिजन्तं च पाटिमा लघिमा यथा ।
विशेषेणेयसुन्निष्टो ज्यायानाप कनीयसीम् ॥ ५४ ॥

---

१ सर्व एवाऽत्र नादयः—ग । २ विशेषेण च—ग ।
३ ततश्चमिष्टया—क ।

द्वयसज्दघ्नचाविष्टौ प्रमाणविषयौ यथा ।
जानुदघ्नी सरिन् नारीनितम्बद्वयसं सरः ॥ ५५ ॥
मतुप्प्रकरणो ज्योत्स्नातमिस्राशृङ्गिणादयः ।
इनश्च फलबर्हाभ्यां फलिनो बर्हिणो यथा ॥ ५६ ॥
इनिः प्रयुक्तःप्रायेण तथा ठंश्च मनीषिभिः ।
तत्रापि मेखलामालामायानां सुतरां मता ॥ ५७ ॥
अभ्यस्ताज्झेरदादेशे दधतीत्यादयोऽपि च ।
रोदितिस्वपितीत्यादि सहेटा सार्वधातुधकम् ॥ ५८ ॥
अभ्यस्तेषु प्रयोक्तव्यमदन्तं च विदेः शतुः ।
असौ दधदलङ्कारं स्रजं विभ्रच्च शोभते ॥ ५९ ॥
........................रं योगिनं वदेत् ।
यथैतच्छ्यामभाति वनं वनजलोचने ॥ ६० ॥
नैकत्रौकारभूयस्त्वं गतो घातो हतो यथा ।
सावर्ण्यंवत्सयोर्भस्य ब्रूयान्नान्यत्र पद्धतेः ॥ ६१ ॥

सालातुरीयमतमेतदनुक्रमेण
को वक्ष्यतीति विरतोऽहमतो विचारात् ।
शब्दार्णवस्य यदि कश्चिदुपैति पारं
भीमाम्भसश्च जलधेरिति विस्मयोऽसौ ॥६२॥

१ भूयान्ना०—क ।

विद्यानां सततमपाश्रयोऽपरासां
तासूक्तान्न[1] च विरुणद्धि कांश्चिदर्थान् ।
श्रद्धेयं जगति मतं हि पाणिनीयं
माध्यस्थ्याद् भवति न कस्यचित्प्रमाणम् ॥ ६३॥

अवलोक्य मतानि सत्कवीना-
मवगम्य स्वधिया च काव्यलक्ष्म ।
सुजनावगमाय भामहेन
ग्रथितं रक्रिलगोमिसूनुनेदम् ॥ ६४ ॥

इति श्रीभामहालङ्कारे षष्ठः परिच्छेदः ।

षष्ठ्या शरीरं निर्णीतं शतषष्ठ्या त्वलङ्कृतिः ।
पञ्चाशता दोषदृष्टिः सप्तत्या न्यायनिर्णयः ॥
षष्ठ्या शब्दस्य शुद्धिः स्यादित्येवं[3] वस्तुपञ्चकम् ।
उक्तं षड्भिः परिच्छेदैर्भामहेन क्रमेण वः ॥



इति ।

---

१ तासूक्तां न—ग । २ वक्रिल—क, रक्त्रिल—घ ।
३ स्यादित्येव—ग ।

# परिशिष्ट १

येषामाचार्याणां ग्रन्थेषु भामहीयकाव्यालङ्कारस्थश्लोकाः केनापि रूपेणोपलभ्यन्ते, तेषां समुद्धृतश्लोकरूपादिप्रदर्शनपूर्वकमकारादिवर्णक्रमेण नामसमुद्देशोऽत्र क्रियते ।

अप्पयदीक्षितः स्वचित्रमीमांसायां—

१४ पृष्ठे–यत्र तेनैव तस्य स्यादुपमानोपमेयता ।
असादृश्यविवक्षातो वदन्ति तमनन्वयम् ॥ ३. ४५.

४२ पृष्ठे–अद्य या मम गोविन्द जाता त्वयि गृहागते
कालेनैषा भवेत् प्रीतिस्तवैवागमनात् पुनः ॥ ३. ५.

अभिनवगुप्तो ध्वन्यालोकलोचने—

१० पृष्ठे–शब्दश्छन्दोविधानर्थः, १. ९.

१२ पृष्ठे–धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥ १. २.

× × × ×

उपेयुषामपि दिवं सन्निबन्धविधायिनाम्
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः ॥ १.६.

३६ पृष्ठे–प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ।
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥ २. ६८.
अहं त्वा यदि नेक्षेय क्षणमप्युत्सुका ततः ।
इयदेवास्त्वतोऽन्येन किमुक्तेनाप्रियेण ते ॥ २. ६९.

३८ पृष्ठे–आदिमध्यान्तविषयं त्रिधा दीपकमिष्यते । २. २५.

× × × ×

अपन्हुतिरभीष्टस्य किञ्चिदर्थगतोपमा ।

× × × ×

नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः ।
अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः ॥

एकदेशस्य विगमे या गुणान्तरसंस्थितिः ।
विशेषप्रथनायासौ विशेषोक्तिरिति स्मृता ॥

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥ ३.३१-२४

४० पृष्ठ-मदो जनयति प्रीतिं सानङ्गं मानभङ्गुरम् ।
स प्रियासङ्गमोत्कण्ठां साऽसह्यां मनसः शुचम् ॥ २.२७.

गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनौ ।
विप्रा न भुञ्जते . . . . . . ॥ ३. ९.

४१ पृष्ठ-तुल्योदयावसानत्वाद् गतेऽस्तं प्रति भास्वति ।
वासाय वासरः क्लान्तो विशतीव तमोगुहाम् ॥ ३. ४८.

४२ पृष्ठ-अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः
अप्रस्तुतप्रशंसा सा त्रिविधा परिकीर्तिता । ३. २९.

१०७ पृष्ठ-उपमानेन तत्त्वं च भेदं च वदतः पुनः ।
ससन्देहं वचः स्तुत्यै ससन्देहं विदुर्यथा ॥ ३. ४३.

१८२ पृष्ठ-स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपयुञ्जते
प्रथमालीढमधवः पिबन्ति कटु भेषजम् । ५. ३.

२०८ पृष्ठ-वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः । १. ३६.

२०९ पृष्ठ-अयं मन्दद्युतिर्भास्वानस्तं प्रति यियासति
उदयः पतनायेति श्रीमतो बोधयन्नरान् । ३. ३४.

आनन्दवर्धनो ध्वन्यालोके—

२०८ पृष्ठ-सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते ।

यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥२.८५.

उद्भटः काव्यालङ्कारसङ्ग्रहे—

५८ पृष्ठे-अपन्हुतिरभीष्टा च किञ्चिदन्तर्गतोपमा ।
भूतार्थापह्नवेनास्या निबन्धः क्रियते बुधैः ॥ ३. २१.

केशवमिश्रोऽलङ्कारशेखरे—

१८ पृष्ठे-क्वचिदग्रे प्रसरता क्वचिदापत्य निघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥ २. ५४.

४९ पृष्ठे-रसवद्दर्शितस्पष्टशृङ्गारादिरसादयम् ।

जयमङ्गलो भट्टिकाव्यटीकायां दशमसर्गस्य—

श्लोके १मे-स्वरूपवर्णविन्यासमनुप्रासं प्रचक्षते । २. ५.
तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् ।
वर्णानां यः पुनर्वादो यमकं तन्निरूप्यते ॥ २. १७.

,, २३तमे-मदो जनयति प्रीतिमानन्दं मानभङ्गुरम् ।
यत्प्रियासङ्गमोत्कण्ठामसह्यां मनसः शुचम् ॥ २. २७.

,, २६ तमे-उपमानेन तुल्यत्वमुपमेयस्य रूप्यते ।
गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः ॥ २. २१.

,, ३०तमे-विरुद्धेनोपमानेन देशकालक्रियादिभिः ।
उपमेयस्य यत्साम्यं गुणमात्रेण सोपमा ॥ २. ३०.

,, ३६ तमे-उपन्यसनमर्थस्य प्रक्रान्तादपरस्य यत् ।
ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यथा ॥ २.७१.

,, ३८ तमे-प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ।
आक्षेप इति तं सन्तः शसन्ति द्विविधो यथा ॥२.६८.

,, ४० तमे-उपमानवतोऽर्थस्य यद्विशेषनिदर्शनम् ।
व्यतिरेकं तमिच्छन्ति विशेषोत्पादनाद्यथा ॥ २. ७५.

,, ४१ तमे-क्रियायाः प्रतिषेधेन तत्फलस्य विभावनात् ।

ज्ञेया विभावनैवासौ सान्वर्थं कथ्यते यथा ॥ २. ७७.

श्लोके ४२ तमे–यत्रोक्तेर्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः ।
सा समासोक्तिरुदिता संक्षिप्तार्थतया यथा ॥ २. ७९.

,, ४३ तमे–निमित्ततो यत्र वचो लोकातिक्रान्तगोचरम् ।
मन्यन्तेऽतिशयोक्तिं तामलङ्कारतया यथा ॥ २. ८१.

,, ४४ तमे–भूयसामुपदिष्टानां क्रियाणामथ कर्मणाम् ।
क्रमशो योऽनुनिर्देशो यथासंख्यं तदुच्यते ॥ २. ८९.

,, ४५ तमे–अविवक्षितसामान्यात् किञ्चिच्चोपमया सह ।
अतद्गुणक्रियारोपादुत्प्रेक्षातिशयान्विता ॥ २. ९१.

,, ४६ तमे–स्वभावोक्तिरलङ्कार इति केचित् प्रचक्षते ।
अर्थस्य तादवस्थ्ये च स्वभावोऽभिहितो यथा ॥ २.९३.
गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः ।
इत्येवमादिकं काव्यं वार्तामेतां प्रचक्षते ॥ २. ८७.

,, ४८ तमे–रसवद्दर्शितं स्पष्टं शृंगारादिरसं यथा । ३. ६.

,, ५० तमे–पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते । ३. ८.

,, ५१ तमे–एतदेवापरेऽन्येन वाक्यार्थेनान्यथा विदुः ।
नानारत्नवियुक्तं यत्तत् किलोदारमुच्यते । ३.१२.

,, ५५ तमे–उपमानेन यत्तत्त्वमुपमेयस्य साध्यते ।
क्रियागुणाभ्यां नाम्ना च श्लिष्टं तदभिधीयते ॥३.१४.
लक्षणं रूपकेऽपीदं विद्यते काममत्र तु ।
दृष्टः प्रयोगो युगपदुपमानोपमेययोः ॥ ३. १५.
श्लेषादेवार्थवचसो यस्य च क्रियते भिदा ।
तत्सहोक्त्युपमाहेतुनिर्देशात् त्रिविधं यथा ॥ ३.१७.

,, ५८ तमे–अपन्हुतिरितीष्टात्र किञ्चिदन्तर्गतोपमा ।
भूतार्थापह्नवादेषा क्रियतेऽस्या भिदा यथा ॥ ३.२१.

श्लोके ५९ तमे-एकदेशस्य विगमे या गुणान्तरसंस्तुतिः ।
विशेषप्रथनायासौ विशेषोक्तिर्मता यथा ॥ ३. २३.

" ६० तमे-दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यता ।
किञ्चित्विधित्सया निन्दा व्याजस्तुतिरसौ यथा ॥ ३.३१.

" ६१ तमे-उपमानस्य तद्भावमुपमेयस्य रूपयन्
यो वदत्युपमाभेदमुपमारूपकं यथा । ३. ३५.

" ६२ तमे-न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया ।
तुल्यकार्यक्रियायोगादित्युक्ता तुल्ययोगिता । ३. २७.

" ६३ तमे-क्रिययैव तदर्थस्य विशिष्टस्योपदर्शनात्
इष्टा निदर्शना नाम यथेववतिभिर्विना । ३. ३३.

" ६४ तमे-गुणस्य च क्रियाया वा विरुद्धान्यक्रियाभिधा
क्रियाविशेषाभिधानाय विरोधं तं विदुर्यथा । ३.२५.

" ६५ तमे-उपमानोपमेयत्वं यत्र पर्यायतो भवेत्
उपमेयोपमां धीरा ब्रुवते तां यथोदिताम् । ३. ३७.

" ६६ तमे-तुल्यकालक्रिये यत्र वस्तुद्वयसमाश्रिते
वाक्येनैकेन कथ्येते सहोक्तिः सा मता यथा । ३.३९.

" ६७ तमे-विशिष्टस्य यदादानमन्यापोहेन वस्तुनः
अर्थान्तरन्यासवती परिवृत्तिरसौ यथा । ३. ४१.

" ६८ तमे-उपमानोपमेयस्य तत्त्वं च वदतः पुनः
ससन्देहवचः स्तुत्यै ससन्देहं विदुर्यथा । ३. ४३.

" ६९ तमे-यत्र तेनैव तस्य स्यादुपमानोपमेयता
सादृश्यस्याविवक्षातस्तमित्याहुरनन्वयम् । ३. ४५.

" ७० तमे-श्लिष्टस्यार्थेन संयुक्तः किञ्चिच्चोत्प्रेक्षयान्वितः
रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथा । ३. ४७.

" ७१ तमे-परा विभूषा संसृष्टिर्बह्वलङ्कारयोगतः

रचिता रत्नमालेव सा चैवं कथ्यते यथा । ३. ४९.
श्लोके ७२ तमे-आशीरपि केषाञ्चिदलङ्कारतया मता
सौहृदस्याविरोधोक्तौ प्रयोगोऽस्याश्च तद्यथा ३.६५.

द्वादशसर्गस्य

" १ मे-भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम्
प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः ।
चित्रोदात्ताद्भुतार्थत्वं कथायास्वभिनीतता
शब्दानाकुलता चेति तस्य हेतुं प्रचक्षते । ३.५३-५४.

दण्डी काव्यादर्शस्य—

द्वितीयपरिच्छेदस्थे—

" २६६ तमे-अद्य या मम गोविन्द जाता त्वयि गृहागते
कालेनैषा भवेत् प्रीतिस्तवैवागमनात् पुनः ३. ९

तृतीय परिच्छेदस्थे

" १२० तमे-हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति । १. ४१
" १२५ तमे-अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम्
शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धिकम् । ४. १.
" १२६ तमे-देशकालकलालोकन्यायागमविरोधि च । ४. २.
" १२८ तमे-समुदायार्थशून्यं यत्तदपार्थमितीष्यते । ४. ८.

नमिसाधू रुद्रटकृतकाव्यालङ्कारटीकायां—

१३ पृष्ठे-प्राकृतं संस्कृतं चैतदपभ्रंश इति त्रिधा । १. १६.
१४५,,-स मारुताकम्पितपीतवासा
विभ्रत् सलीलं शशिभासि शंखम् ।
यदुप्रवीरः प्रगृहीतशार्ङ्गः
सेन्द्रायुधो मेघ इवावभासे ॥ २. ४१.

स पीतवासाः प्रगृहीतशार्ङ्गो
मनोन्य (?) भीमं वपुराप कृष्णः।
शतह्रदेन्द्रायुधवान् निशायां
संसृज्यमानः शशिनेव मेघः ॥ २. ५८.

निपेतुरास्यादिव तस्य दीप्ताः
शरा धनुर्मण्डलमध्यभाजः।
जाज्वल्यमाना इव वारिधारा
दिनार्धभाजः परिवेषिणोऽर्कात् ॥ २. ४७.

१४६ पृष्ठे–अयं पद्मासनासीनश्चक्रवाको विराजते।
युगादौ भगवान् ब्रह्मा विनिर्मित्सुरिव प्रजाः॥ २.५५

वनेऽथ तस्मिन् वनिताविहारिणः
प्रभिन्नदानार्द्रकटा मतङ्गजाः।
विचित्रबर्हाभरणाश्च बर्हिणो
बभुर्दिवीवामलविग्रहा ग्रहाः। २. ६३.

प्रतिहारेन्दुराज उद्भटकृतकाव्यालङ्कारलघुवृत्तौ—

४७ पृष्ठे–ससहोक्त्युपमाहेतुनिर्देशात् त्रिविधं यथा। ३. १७.

६२ पृष्ठे –अयं मन्दद्युतिर्भास्वानस्तं प्रति यियासति
उदयः पतनायेति श्रीमतो बोधयन् नरान्। ३. ३६.

७४ पृष्ठे–चित्रोदात्ताद्भुतार्थत्वं कथायाः स्वभिनीतता।
शब्दानाकुलता चेति तस्य हेतुं प्रचक्षते। ३.५४.

७८ पृष्ठे –वृत्तदेवादिचरितशंसि चोत्पाद्यवस्तु च
कलाशास्त्राश्रयं चेति चतुर्धा भिद्यते पुनः। १. १७.

प्रेमचन्द्रतर्कवागीशः काव्यादर्शटीकायां—

प्रथमपरिच्छेदस्य—

१ श्लोके–सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम्

तदेतदादुः सौशब्द्यं नार्थव्युत्पतिरीदृशी । १. १४.

द्वितीयपरिच्छेदस्य

२२० श्लोके–सैषा सर्वैव वक्रोक्तिरनयाथार्थो विभाव्यते

यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना २.८५.

२३६ ”–हेतुश्च सूक्ष्मलेशौ च नालङ्कारतया मता

समुदायाभिधेयस्य वक्रोक्त्यनभिधानतः । ३. ८६.

तृतीयपरिच्छेदस्य

१२७ ”– प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टं च नेष्यते । ४. २.

भोजराजः सरस्वतीकण्ठाभरणे—

२६ पृष्ठे–असितर्तितुगद्रिच्छित् स्वःक्षितां पतिरद्रिदृक्

अमिद्भिः शुभ्रदृग्दृष्टैर्द्विषो जेघ्रीयिषीष्ट वः । १. ४६.

४९०पृष्ठे–किंशुकव्यपदेशेन तरुमारुह्य सर्वतः

दग्धादग्धामरण्यानां पश्यतीव विभावसुः । १. ९२.

मम्मटः काव्यप्रकाशस्य

षष्ठोल्लासे

–रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः

न कान्तमपि निर्भूषं विभाति वनिताननम् ।

रूपकादिमलङ्कारं बाह्यमाचक्षते परे

सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ।

तदेतदादुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी

शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः । १.१३–१५.

दशमोल्लासे–सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते

यत्नोऽस्यां कविभिः कार्यः कोऽलङ्कारोऽनया विना२८९

अयं पद्मासनासीनश्चक्रवाको विराजते

युगादौ भगवान् वेधाः विनिर्मित्सुरिव प्रजाः २.५५.

स पीतवासाः प्रगृहीतशार्ङ्गो
मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान् निशायां
संसृज्यमानः शशिनेव मेघः ॥ २. ५८.
निपेतुरास्यादिव तस्य दीप्ताः
शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधाराः
दिनार्धभाजः परिवेषिणोऽर्कात् ॥ २. ४७.

मल्लिनाथो भट्टिकाव्यटीकायां—

एकादशसर्गस्य

१ मे श्लोके-श्राव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते
आविद्वदङ्गनाबालप्रतीतार्थं प्रसादवत् । २. ३.

द्वादशसर्गस्य

१ मे श्लोके-भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम्
प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः ।
उदात्तार्थाद्भुतार्थत्वे कथायास्त्वभिनीतता
शब्दानाकुलता चेति तस्य हेतुं प्रचक्षते २. ५३-५४.

रुय्यकोऽलङ्कारसर्वस्वे

१८३ पृष्ठे-शब्दानुकूलता चेति तस्य हेतून् प्रचक्षते २. ५४.

वल्लभः सुभाषितावल्यां—

१५४६ –किंशुकव्यपदेशेन तरुमारुह्य सर्वतः
दग्धादग्धमरण्यान्यां पश्यतीव विभावसुः । २. ९२.
१६४४–नेयं विरौति भृङ्गाली मदेन मधुरस्वरा
अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः । ३. २२.

वामनः स्वकाव्यालङ्कारसूत्रवृत्तौ—

पृष्ठे—सूर्यांशुसंमीलितलोचनेषु
दीनेषु पद्मानिलनिर्मलेषु ।
साध्व्यः स्वगेहेष्विव भर्तृहीनाः
केका विनेशुः शिखिनां मुखेषु ॥ २. ४६.

विश्वेश्वरपण्डितोऽलङ्कारकौस्तुभे—

२३ पृष्ठे—यत्र तेनैव तस्य स्यादुपमानोपमेयता
असादृश्यविवक्षातो वदन्ति तमनन्वमम् । ३. ४५.

हेमचन्द्रः काव्यानुशासने—

१७ पृष्ठे—गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः
इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षते॥२. ८७.

२८ " —नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः
अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः । ३. २२.

२६८ " —अहं त्वां यदि नेक्षेय क्षणमप्युत्सुका ततः
इयदेवास्त्वतोऽन्येन किमुक्तेनाप्रियेण ते २. ६९.

२७० " —स एकस्त्रीणि जयति जगन्ति कुसुमायुधः
हरतापि तनुं यस्य शम्भुना न हृतं बलम्। ३. २४.

काव्यानुशासनटीकायां—

७ पृष्ठे—न स शब्दो न तद्वाच्यं न स न्यायो न सा कला
जायते यन्न काव्याङ्गमहो भारो गुरुः कवेः ।

२६७ पृष्ठे—सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना२८९.

२७९ ,, —व्यालवन्तो दुरारोहा रत्नवन्तः फलान्विताः
विषमाः भूभृतस्तेभ्यो भयमाशु प्रमादिनाम् ४. १९. ॥

# परिशिष्ट २

## भामहीयकाव्यालङ्कारस्थश्लोकनां वर्णानुक्रमणी ।

# परिशिष्ट ३

काव्यालङ्कारे समुल्लिखितानां ग्रन्थानां ग्रन्थकर्तॄणां च

## वर्णक्रमेण नामानि—





# INDEX

५० अधिकरणकौमुदी । श्रीदेवनाथठक्कुरकृता । (मीमां० ४) रु० १-०

५१ रघुवंशमहाकाव्यम् । महाकविश्रीकालिदासविरचितम् म.म. श्रीमल्लिनाथकृतसञ्जीविनीटीकयोपेतम् पं० श्रीकनकलालठक्कुरेण विरचितया भावबोधिनी टिप्पण्या समलङ्कृतः संपूर्णम् । (काव्य ५) रु० १—४

५२ काथबोधः । साजनीकृत टीकोपेतः । दत्तात्रेय सम्प्रदायाऽनुगतः। रु०—८

५३ रसचन्द्रिका । पर्वतीय-पण्डितप्रवर-श्रीविश्वेश्वरपाण्डेय निर्मिता । (काव्य० ६) रु० १—०

५४ अलङ्कारमुक्तावली । पर्वतीय- विद्वद्वर-श्रीविश्वेश्वर पाण्डेय- निर्मिता । (काव्य० वि० ७) रु०-१२-०

५५ वृत्तरत्नाकरः-भट्टकेदारप्रणीतः । नारायणभट्टीयव्याख्यासहितः सम्पादकनिर्मितविषमस्थलटिप्पणोपेतः । श्रुतबोधछन्दोमञ्जरीसुवृत्ततिलकैश्च समेतः । (छंद वि० १) १-८-०

५६ अलङ्कारशेखरः । केशवमिश्रकृतः । साहित्योपाध्याय श्री अनन्तरामशास्त्रिणा भूमिकादिभिः संभूष्य संशोधितः । (अल०वि०१)१—४

५७ शक्तिवादः । श्रीगदाधरभट्टाचार्यप्रणीतः । टीकात्रयोपेतः । कृष्णभट्टकृतया मञ्जूषया-माधवभट्टाचार्यनिर्मितया विवृत्या श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाचार्यतर्करत्नन्यायरत्न गोस्वामिदामोदरशास्त्रिरचितया विनोदिन्या च समेतः । (न्या० वि० ७) २-०-०

५८ प्रौढमनोरमा । म. म. श्रीभट्टोजीदीक्षितविरचिता तत्पौत्र म. म. श्रीहरिदीक्षितविरचितलघुशब्दरत्नाख्यव्याख्यया समेता । म. म. पण्डितश्रीभैरवमिश्रविरचितशब्दरत्नव्याख्यया युक्ता । श्रीयुतभाण्डारीत्युपाह्वमाधवशास्त्रिविरचित प्रभानामकटिप्पण्या समलङ्कृता । श्रीयुतजगन्नाथशास्त्रिविरचितयाव्ययीभावस्य शब्दरत्नप्रदीपकनामकटीप्पण्याऽलङ्कृता (अव्ययीभावान्तः प्रथमो भागः) (व्याकरण वि० ९) रु० ५—०—०.

५९ आपस्तम्बगृह्यसूत्रम् । श्रीहरदत्तप्रणीतयाऽनाकुलाख्यया व्याख्यया. श्रीसुदर्शनाचार्यप्रणीतया तात्पर्यदर्शनाख्यया व्याख्यया च समलङ्कृतम्, पृथक् सूत्रपाठेन, पाठभेदेन, मीमांसापदार्थविवरणेन च संयोजितम् (कर्म० वि० ५) मूल्यम् रु० ३—०—०

६० नाट्यशास्त्रम् । भरतमुनिप्रणीतम् (सम्पूर्णम्) साहित्योपाध्याय एम.ए. [illegible] पण्डित बटुकनाथ शर्मणा तथा साहित्यशास्त्रि एम.ए. पदवीभूषित-पण्डित बलदेवोपाध्यायेन च सम्पादितम् । (नाट्यशास्त्र वि० १) मूल्यम् रु० ५-०-०.

पत्रादिप्रेषणस्थानम्

जयकृष्णदास—हरिदासगुप्तः,
चौखम्बा-संस्कृत सीरीज आफीस,
विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक
बनारस सिटी ।